गोरक्षमाचष्टे इति गोरयति ।

## २०१ गोरि-धातोरूपाणि ॥

१ गोरय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥

२ गोरये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥

३ गोरय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥

४ अगोरय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

५ अजुगोर-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

६ गोरया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥

७ गोर्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥

८ गोरयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥

९ गोरयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥

१० अगोरयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

समानलोपित्वात् ह्रस्वाभावः सन्वत्कार्याभावश्च ।

तक्षमाचष्टे इति तक्षयति ।

## २०२ तक्षि-धातोरूपाणि ॥

१ तक्षय-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥

२ तक्षये-त्, ताम्, युः, :, तम्, त, यम्, व, म ॥

३ तक्षय-तु, तात्, ताम्, न्तु, ", तात्, तम्, त, ाणि, ाव, ाम ॥

४ अतक्षय-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

५ अततक्ष-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

६ तक्षया-ञ्चकार, इ० ॥ म्बभूव, इ० ॥ मास, इ० ॥

७ तक्ष्या-त्, स्ताम्, सुः, :, स्तम्, स्त, सम्, स्व, स्म ॥

८ तक्षयिता-", रौ, रः, सि, स्थः, स्थ, स्मि, स्वः, स्मः ॥

९ तक्षयिष्य-ति, तः, न्ति, सि, थः, थ, ामि, ावः, ामः ॥

१० अतक्षयिष्य-त्, ताम्, न्, :, तम्, त, म्, ाव, ाम ॥

आख्यानं, नलोपाख्यानं, कंसवधं, सीताहरणं रामप्रव्रजनं, राजागमनं, मृगरमणम्, आरात्रिविवासमाचष्टे इत्यादिषु, इन्द्रियाणां जयं, क्षीरस्य पानं, देवानां यागं, धान्यस्य क्रयं, धनस्य त्यागम्, ओदनस्य पाकं करोतीत्यादिषु च बहुलवचनान्न भवति । मतान्तरे तु भवति-आचष्ट इत्यर्थे णिच् । तथाहि-'आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' इति वार्तिकम् । आख्यानवाचकात् कृदन्तात् तदाचष्टे इत्यर्थे णिच्, णिच्प्रकृत्यवयवकृतो लुक्, तस्यैव कृतो या प्रकृतिर्हन्यादिस्तस्याः प्रत्यापत्तिः विकारपरित्यागेन स्वरूपेणावस्थितिः, प्रकृतिवत् कृत्प्रकृतिप्रकृतिकणिजन्तवत्, कारकं च हेतुमणिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावन्तर्भूतं द्वितीयान्तं यादृशं च कार्यं कुत्वतत्वादि तदिहापि इति वार्तिकार्थः । उक्तवार्तिकेन कंसवधमाचष्टे इत्यर्थे कंसवधशब्दाण्णिचि वधादेशनिवृत्तौ प्रकृतिवत्कारके कुत्वतत्वादिकार्ये च कंसं घातयति, घातयेत्, घातयतु, अघातयत्, अजीघतत्, घातयांचकार, घात्यात्, घातयिता, घातयिष्यति, अघातयिष्यत्, इति । सीताहरणमाचष्टे सीतां हारयति, रामप्रव्रजनमाचष्टे रामं प्रव्राजयति, राजागमनमाचष्टे राजानमागमयति, मृगरमणमाचष्टे मृगं रमयति, रात्रिविवासमाचष्टे रात्रिविवासयति, चैत्रपाकमाचष्टे चैत्रेण पाचयति, इति । यत्रानेकविशेषणविशिष्टा क्रिया प्रत्ययार्थस्तत्र क्रियाविशेषाभिव्यक्तये उपसर्गप्रयोग आवश्यकः, यथा विपाशयति, संपाशयति । पाशिक्रिया हि

मोचनसंयमनाद्यनेकविशेषणविशिष्टा सती प्रत्ययवाच्या, ततश्चोपसर्गप्रयोगाभावे एक-
रेणापि विशेषणेन वैशिष्ट्यं न प्रतीयेत। यत्र त्वेकविशेषणविशिष्टा क्रिया प्रत्ययार्थस्तत्र संदे-
भावादुपसर्गो न प्रयुज्यते। यथा—श्येन इवाचरतीति श्येनायते। एवं प्रत्ययस्यानेकार्थत्वे-
पे अर्थविशेषाभिव्यक्त्यर्थमुपसर्गप्रयोगः। यथा हस्तिना अतिक्रामति अतिहस्तयतीति।
नेकोपसर्गविशिष्टक्रियायाः प्रत्ययार्थत्वे शब्दशक्तिस्वाभाव्यादेक एवोपसर्गार्थः प्रत्ययार्थे-
तर्भवति द्वितीयस्तूपसर्गेणैव प्रत्याय्यते, यथा—भाण्डानि समाचिनोति सम्भाण्डयते इति॥

इति श्रीमत्तपोगणगगनाङ्गणगगनमणि—सार्वसार्वज्ञशासनसार्वभौम—विद्यापीठादि-
प्रस्थानपञ्चकसमाराधक—संविग्नशाखीय—आचार्यचूडामणि—अखण्डविजय-
श्रीमद्गुरुराजविजयनेमिसूरीश्वरचरणेन्दिरामन्दिरेन्दिन्दिरायमाणेनान्ते-
वासिना शास्त्रविशारदेन कविरत्नेन व्याकरणवाचस्पतिना महोपाध्याय-
लावण्यविजयगणिना विरचितस्य धातुरत्नाकरस्य नामधातु-
प्रक्रियानिरूपणे षष्ठभागे णिच्प्रत्ययान्तप्रकरणं सम्पूर्णम्॥

समर्थितश्च धातुरत्नाकरस्य नामधातुनिरूपणो
नाम षष्ठभागः॥

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥ १॥

छद्मस्थेषु सदा स्खलद्गतितया दोषप्रबन्धान्वये
नो हास्यास्पमत्र दोषघटनायां स्यामहं धीमताम्।
नो प्रार्थ्याः कृतिनो निसर्गगरिमावासा मया शोधने
येषां दोषगणप्रमाजनविधिः स्वाभाविकोऽयं यतः॥ २॥